# आरण्यसंहिता

श्रीमत् सायणाचार्यकृतभाष्यसहिता ।

# ARANYASANHITA

OF

## SAMAVEDA,

WITH THE COMMENTARY

OF

## SAYANACHARYA.

EDITED AND PUBLISHED

BY

*PANDIT JIBANANDA VIDYASAGARA, B A*

*Superintendent Free Sanskrit College, Calcutta*

SECOND EDITION



CALCUTTA

PRINTED AT THE SARASWATI PRESS

1891

To be had from Pandit Jibananda Vidyasagara, B. A

Superintendent Free Sanskrit College, Calcutta.

# एतानि मुद्रितसंस्कृतपुस्तकानि ।

१ मुग्धबोधव्याकरणम् २
२ धातुरूपादर्श } १॥०
३ शब्दस्तोममहानिधि ८
४ सिद्धान्तकौमुदी सरलासहिता १०
५ सिद्धान्तबिन्दुसार (वेदान्त) ॥०
६ शुद्धदानादिपद्धति (बङ्गाक्षरे) ४
७ गयाश्राद्धादिपद्धति १
८ शब्दार्थरत्नम् ॥
९ वाक्यमञ्जरी (बङ्गाक्षरे) ।०
१० सटीक छन्दोमञ्जरी वृत्तरत्नाकर ॥०
११ वेणीसंहारनाटक सटीक ॥०
१२ मुद्राराक्षसनाटक सटीक १
१३ रत्नावलीनाटिका सटीक ॥०
१४ मालविकाग्निमित्रनाटक सटीक १
१५ धनञ्जयविजयनाटक सटीक ।०
१६ महावीरचरितनाटक सटीक १॥०
१७ महावीरचरितनाटक मूलमात्र ॥०
१८ वैयाकरणभूषणसार ॥०
१९ लीलावती भास्कराचार्यरचित ॥०
२० बीजगणित भास्कराचार्यरचित ॥०
२१ शिशुपालवधकाव्य सटीक (माघ २
२२ किरातार्जुनीयकाव्य सटीक १॥०
२३ कुमारसम्भवकाव्यपूर्वखण्ड सटीक ०
२४ कुमारसम्भवकाव्य उत्तरखण्डसटीक १
२५ अष्टकम् पाणिनीयम् ।०
२६ वाचस्पत्यम् (बृहदभिधान) १००
२७ कादम्बरीविस्तृतव्याख्यासहिता ३
२८ राजप्रशस्ति सटीक /
२९ अनुमानचिन्तामणि तथा
अनुमानदीधिति न्यायशास्त्र ४।
३० सर्वदर्शनसंग्रह दर्शनशास्त्र १
३१ भामिनीविलासकाव्य सटीक ॥०

३२ हितोपदेश सटीक
३३ भाषापरिच्छेदमुक्तावलीदि
३४ बहुविवाहवाद
३५ दशकुमारचरितगद्यकाव्य
३६ परिभाषेन्दुशेखर
३७ कविकल्पद्रुम (धातुपाठ)
३८ चक्रदत्त (वैद्यक)
३९ छन्दोदिगुल सटीक
४० मेदिनीकोष
४१ पञ्चतन्त्रम् विष्णुशर्मकृत सटी
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य
४३ माधवचम्पूकाव्य
४४ तर्कसंग्रह व अनुवादसहित
४५ प्रसन्नराघवनाटक जयदेवकृत
४६ विवेकचूडामणि वेदान्त
४७ काव्यसंग्रह मूलमात्र
४८ काव्यसंग्रह सटीक (सम्पूर्ण)
४९ ऋतुसंहार काव्य सटीक
५० विक्रमोर्वशी नाटक (सटी
५१ वसन्ततिलक भाणनाटक
५२ गायत्री व्याख्या
५३ साङ्ख्यदर्शन (भाष्यसहित)
५४ भीमप्रभ
५५ नलोदय काव्य सटीक
५६ ईश केन कठ प्रश्न मुण्ड माण्डू
उपनिषद् (सटीक सभाष्य)
५७ छान्दोग्य उपनिषद् सटीक भा
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर
(उपनिषद्) सभाष्य सटीक
५९ बृहदारण्यक सटीक सभाष्य
६० सुश्रुतसंहिता सटीक (वैद्यक)
६१ शार्ङ्गधरसंहिता (वैद्यक)

सामवेदस्य

# आरण्यसंहिता ।

श्रीमत् सायणाचार्य्यकृतभाष्यसहिता ।

पण्डितकुलपतिना

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृता प्रकाशिता च ।

द्वितीयसंस्करणम् ।



कलिकातानगर्य्यां

सरस्वतीयन्त्रे

मुद्रिता ।

इं १८८१ ।

# आरण्य-संहिता।

ओं नमः सामवेदाय।

आमोदाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
कृपालुः सायणाचार्य्यो वेदार्थं वक्तुमुद्यतः ।
आरण्यकाभिधः षष्ठोऽध्यायो(क) व्याक्रियतेऽधुना ॥ ३ ॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात् ।
ऋषिच्छन्दोदैवतञ्च तत्र तत्राभिदध्महे ॥ ४ ॥
तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः ।
द्वितीयस्य वसिष्ठः स्यात्, तृतीयाया ऋचः स्मृतः ॥ ५ ॥
वामदेवस्ततश्छन्दो बृहती त्रिष्टुबेव च ।
गायत्रीति क्रमादिन्द्रो भवेत् तिसृणु देवता ॥ ६ ॥

---

(क) अत्र आर्चिक-पञ्चा इति विवरणादि-सकल-ग्रन्थ-सम्मता वैदिक-सम्प्रदायानुगताः पुस्तकादाना सर्वोपदेशेनोपलम्भात् । तथाच षडध्यायकश्छन्दो नाम एकः, अपरो नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् षष्ठोऽध्यायैकात्मकम् आरण्यम् इति व्यवहृतः । सायण-मते तु नैवम् । अयं हि षष्ठोऽप्यपि मानैरेव छन्दोग्रन्थं परिसमाप्य तदीय षष्ठोपभाग एव इति मन्यते ।

## प्रथम-खण्डे—

तत्र प्रथमा।

भरद्वाजऋषि, बृहतीछन्दः, इन्द्रोदेवता।

२ १ १ २ १ १ २ १ १ २ १ २ १ १ २

ओम्। इन्द्रज्येष्ठन्नआभरआँओजिष्ठम्पुपुरिश्रव:।

१र २र २ १ २ २ १ २ २र

यद्दिधृक्षेमवज्रहस्त (१) रोदसीउभेसुशिप्रपप्राः

॥ १ ॥

हे 'इन्द्र'। (ख) 'ज्येष्ठं' प्रशस्यतमम् 'ओजिष्ठम्' अतिशयेन बलकरम् 'पुपुरि' पूरक 'श्रव' अन्न 'न' अस्मभ्यम् 'आभर' आहर प्रयच्छ। हे 'वज्रहस्त'! वज्रबाहो! हे 'सुशिप्र'। शोभनहनुक। एवम्भूत। हे इन्द्र! 'यत्' अन्न 'दिधृक्षेम' धारयितुमिच्छेम, यच्चान्नम् इमे परिदृश्यमाने 'उभे रोदसी' द्यावापृथिव्यौ 'आ पप्राः' आ पूरयसि, तदन्नमाहरेत्यन्वय ॥१॥

अथ द्वितीया।

वसिष्ठऋषि', त्रिष्टुप्छन्द', इन्द्रोदेवता।

२ २ १ २ १ २ २ १र २र २ २ २ १ २ १

इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपं-

३ २ १ २ २ २ २ १ २ २ २ ३ २ १ २

यदस्य। ततोददातिदाशुषेवसूनिचोदद्राधउप-

---

(१) "येनेमेचित्रवज्रहस्त"—इति बह्वृचां पाठ।

(ख) "इन्द्रतेज्येष्ठ-बर्धेन"-इति नैरुक्तम् २का० १०ष० दख० दैवतकाण्डगतमिति द्रष्टव्यम्।

२ १
स्तुतं चिद्वांक् ॥ २ ॥

य 'इन्द्र' 'जगतो' जङ्गमस्य पश्चादे यतो 'राजा' ईश्वरो भवति चर्षणीनां मनुष्याणा च राजा भवति। किञ्च। अधि क्षमा (सप्तम्येकवचनस्य लुक) क्षमाया (ग) 'विश्वरूपं' 'यत्' धनमस्ति तस्यापि राजा भवति। 'ततो' ददाति दाशुषेव सूनि' यजमानाय वसूनि धनानि ददाति। स इन्द्रोऽस्माभि उपस्तुतं सम्यक स्तुत राध' धन 'अर्वाक्' अस्मदभिमुख 'चोदत्' प्रेरयतु। २।

अथ तृतीया।

वामदेवऋषि, गायत्रीच्छन्द, इन्द्रादेवता।

१ १ २ २ ३ १ २ ३ २उ ३ १ २ ३२
यस्येदमारजोयुजस्तुजेजनेवनंस्वः

१ २ ३ १ २ ३ २
इन्द्रस्यरन्त्यंवृहत् ॥ ३ ॥

'रजोयुज' ज्योतिर्भिर्युक्तस्य (ज्योतीरज उच्यत इति यास्क) अत्यन्ततेजस्विनो 'यस्य इन्द्रस्य 'इद' पुरोवर्ति स्तोत्र युक्त हविरस्ति तदपि 'स' स्वर्गं सर्वत्र वा 'तुजे' दातरि जने यजमानविषये 'वन यतो वननीय सम्भजनीय खलु।

---

(२) "अधिक्षमा" "अधिक्षमि" इति, "विश्वरूपं" 'विपुरूपम्" इति, "उपस्तुतम्" "उपस्तुत" इति च साम्न ऋच पाठभेद।

(ग) निघण्टौ पृथिवीनामसु क्षमा इति पठ्यम् पदम्।

अतः 'इन्द्रस्य' दानं 'रत्नम्' अत्यन्तरमणीयं 'बृहत्' प्रभूतं भवति ॥ ३ ॥

अथ चतुर्थी।

शुनःशेपऋषिः, चतुष्पाज्जगतीच्छन्दः, वरुणो देवता।

१२ ३११ २१ ३१२।२ ३२३।२ ३२ ३ १ २

उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय।

१२ ३१२।२ ३२३ २ ३ १ २

अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥४॥

आद्ये ऋचौ चतुष्पादे ह्येकपादयुतान्तिमा।
शौनःशेपो गार्त्समदो वामदेवोति ताः क्रमात्।
वारुणी पावमानी च वैश्वदेवीति संस्मृताः।

हे 'वरुण' ! (घ) 'उत्तमम्' उत्कृष्टं शिरसि बद्धं 'पाशम्' 'उच्छ्रथाय' उत्कृष्टं शिथिलं कुरु। 'अधमं' निकृष्टं पादेऽवस्थितं पाशं 'अवश्रथाय' अव अधस्तात् शिथिलीकुरु। 'मध्यमं' नाभिदेशगतं पाशं 'विश्रथाय' वियुज्य शिथिलीकुरु। 'अथ' अनन्तरं हे 'आदित्य' अदिति' पुत्र ! (ङ) वरुण !

---

(४) "अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति आसु ऋचः पाठभेदः ॥

(घ) "इयमस्य आदिते जननि मते राजानौ मित्रावरुणा विवासि। अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ऋक् १०म० ६, ४, ६"-इति मन्त्रलिङ्गात्—"अहोरात्रे मित्रावरुणौ शत० ११का० २२ख०"-नैरुक्त-भाष्याच्च मित्रचन्द्रेण दिवा, वरुणचन्द्रेण च रात्रिः सुपद'। "वरुणः वृणोतीति सतः १का० १०अ० २ख०"-इति श्रुतिपादनात् सर्वेषां वरुणादीनां तमोऽपहमेव आवरकत्व।

(ङ) "अदितिरदीना"-"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता

'वय' ग्रन नेवाः 'तव' व्रते त्वदीये कर्मणि 'अदितये' खण्डन-राहित्याय 'अनागस' अपराध-रहिता 'स्याम' भवेम ॥ ४ ॥

अथ पञ्चमी ।

गृत्समदऋषि, चतुष्पाज्जगती च्छन्द, पवमानोदेवता ।

१ २ ३ १र २र  २१ २३१र २र  ३१२
त्वयावयंपवमानेनसोमभरेकृतंविचिनुयामशश्वत् ।

१ २ २ १ २  २ १ २ ३ १ २ ३ २
तन्नोमित्रोवरुणोमामहन्तामदितिःसिन्धुःपृथिवी-

२ २
उत द्यौः ॥ ५ ॥

हे 'सोम' ! (ख) पवमानेन पवित्रेण पूयमानेन 'त्वया' सहायेन 'भरे' (सङ्ग्राम नाम) सङ्ग्रामे शश्वद् बहु 'कृत' कर्त्तव्य 'वय' 'विचिनुयाम' विशेषेण कुर्य्याम । यस्मात्तव साहाय्येन कर्माणि कुर्मः 'तत्' तस्मात् अस्मान् 'मित्रो वरुण अदिति' एतन्नामिका, 'सिन्धु' (ग) एतदभिधाना, तथा 'पृथिवी', 'उत' 'अपिच' 'द्यौ' ! एते मित्रादय 'नः' अस्मान् 'मामहन्ताम्' पूजयन्तु धनादि दानेन ॥ ५ ॥

---

स पिता स पुत्र । विश्वेदेवा अदिति पञ्चजना अदितिर्जातमदितिर्जनित्वम्"-इत्यदितेर्विभूतिमाचष्ट एनामदीनानीति वा"—इति नैरुक्तम् ४आ० ४ख० २२ १२ख० । दिति खण्डने तस्माशोऽदितिरिति विभक्तोर्व्यो भाष्यादिकम् ।

(ख) सोम पुनीते"-इत्यादि नैरुक्तम् १आ० ३।५० २ख० । तस्मात् सोम पवित्र महैश्वर्यं ।

(ग) सिन्धु समुद्र, ससद इति अन्तरिक्षनामसु पञ्चदशम् पदम् नि० १, ३ ।

अथ षष्ठी।

६ वामदेवऋषिः, एकपाज्जगतीच्छन्दः, विश्वेदेवा देवता।

१ २र २र १ २ उ२ ७

इषंतूर्जमपृणतकमिन्द्राम् ॥ ६ ॥

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः। यूयम् 'एकम्' अद्वितीयं दानकर्मणि 'इषं' सोमं 'सुपर्णं' कामानामभिवर्षक 'कृणुत' कुरुत। तथा 'इमां' क्रियां फलाभिवर्षिकां कुरुत ॥६॥

अथ सप्तमी।

अमहीयु ऋषिः, गायत्रीच्छन्दः, पवमानो देवता।

१ २ १ २ १ २ १ २ २ १

सनइन्द्रायवज्यवेवरुणायमरुद्भ्यः।

२ १र २र

वरिवोवित्परिस्रव ॥ ७ ॥

गायत्री पावमान्यौ तु सनइत्यादिके ऋचौ।
अमहीयुस्तयोरेव छन्दोदैवत निर्णयः ॥ १ ॥

हे सोम। (ज) 'सः' 'वरिवोवित्' धनस्य लम्भकस्त्वं 'नः' अस्माक 'यज्यवे' यष्टव्यायेन्द्राय (झ) 'वरुणाय' (ञ)

---

(ज) 'अथैषा परा भवति चन्द्रमसो वैतस्य वा''-इत्या० ११अ० ४ख०।

(झ) 'इरा इदातीति वेरा दधातीति वा'-इत्यादि नैरुक्तम् इत्या० १०अ० द्ख०। इरायब्देन अन्न प्रसिद्धम्, जलयोनित्वान्निरिव-स्यान्नेरितीन्द्रपदेनाग्निरपि व्यज्यते।

(ञ) 'वरुण कवस्थं प्र-ससर्ज'-इत्यादि-मन्त्रलिङ्गात् वरुणो मेघ-वर्षेण हेतुभूत, स च आकाशचारिसमूह प्रसिद्ध।

'मरुद्भ्र' (ट) च 'परिस्रव' धारया चर ॥ ७ ॥

अथाष्टमी ।

अमहीयुरृषि, गायत्रीच्छन्द, पवमानोदेवता ।

२ ३१र २र ३ २उ ३ २ ३ १ २

एनाविश्वान्यर्य्य आ द्युम्नानि मानुषाणाम् ।

१ २

सिषासन्तो वनामहे ॥ ८ ॥

'एना' एतेनानेन सोमेन 'मानुषाणां' मनुष्याणां 'विश्वानि' 'द्युम्नानि' अन्नानि 'अर्य्य' अभिगच्छन्तः 'सिषासन्त' सम्भोक्तुमिच्छन्तश्च वय 'वनामहे' भजामहे ॥८॥

अथ नवमी ।

त्रिष्टुभा अन्नदेवता आत्मानमेवाह—आत्मा एव ऋषि ।

२ १ २ ३ २ ३ २ ३

अहमस्मि प्रथमजा ऋतस्य-

१ २ ३ १ २ ३ १ २ २ १ २

पूर्व्वं देवेभ्यो अमृतस्य नाम ।

३ १ २ ३ २उ ३ १ २ ३

यो मा ददाति स इदेव मावद-

२उ ३ २ १ ३ १ २

हमन्नमन्नमदन्तमद्मि ॥ ९ ॥

'देवेभ्य:' पूर्व्वं अग्नि वरुणादि देवेभ्य पुरा 'अहम्' अन्न

---

(ट) 'मरुतो मितराविणो वा, मितरोचिनो वा, महद्द्रवन्तीति वा' इति नैरुक्तम ११का० १३अ० १३ख० । 'वायुर्वै ज्येष्ठा देवता'-इति च श्रूयते । ततो मरुतो वायव इति सिद्धान्त ।

देवता 'अमृतस्य' विनाश-रहितस्य 'ऋतस्य' सत्यस्य परब्रह्मणः सम्बन्धिनी 'प्रथमजा अस्मि नाम' प्रथमत एवोत्पन्ना भवामि खलु। 'यः' पुमान् 'मां ददाति' अन्नरूपां माम् अतिथ्यादिभ्यो ददाति 'स इत्' स एव 'एव' परिदृश्यमान-प्रकारेण 'आवत्' भवति सर्वान् प्राणिनो रक्षति। यस्तु लोभ युक्तः सन् प्राणिभ्योऽन्नमदत्वा स्वयमेव तदन्नमत्ति। 'अन्नम् अदन्त' नानाविधान्नभक्षकं तं लोभिनम् 'अहमन्नम्' अन्न देवता 'अद्मि' भक्षयामि विनाशयामीत्यर्थः ॥ ८ ॥

## इति प्रथमः खण्डः ।

—:o◯o:—

## अथ—द्वितीयखण्डे—

सैषा प्रथमा ।

सुतकक्ष ऋषि, इन्द्रोदेवता, गायत्रीच्छन्दः ।

३ २ १ २ २ २ १ २

त्वमेतदधारयःकृष्णासुरोहिणीषुच ।

१ २ २ २ ३ १ २

परुष्णीषु*रुशत्पयः ॥ १० ॥

अस्य सामर्थ्यमेवोपपादयति। हे इन्द्र! 'कृष्णासु' कृष्ण-वर्णासु गोषु। 'तथा रोहिणीषु च' [ "वर्णादनुदात्तात्तोपधात्तो नः" इति ङीप्) रोहितवर्णासु [ 'परुष्णीषु' परुष्णी पर्ववतीति यास्कः ] पर्वशः पर्वशो नानावर्णासु च गोषु 'रुशत्' [ रोचतेर्दीप्तिकर्मणः ] दीप्यमानं श्वेतम् 'एतत्' परिदृश्य-

* "परुष्णीषु" इति ऋग्वेदीयः पाठः।

मानं 'पयः' क्षीरं त्वम् 'अधारयः' धारयसि। तस्मात्-तम्
पूजयाम इति समन्वयः ॥ १० ॥

अथ द्वितीया।

पवित्रऋषिः, जगतीच्छन्दः, पवमानो देवता।
अरूरुचदिति त्वेतां पवित्रो दृष्टवानृषिः।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता ॥

१ २ २ ३ २ ३ १ २ २ ३ २ ३ १ २ २ १
अरूरुचदुषसःपृश्निरग्रियउक्षामिमेतिभु-

२ ३ १ २ १ २
वनेषुवाजयुः। मायाविनोममिरेअस्य-

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
मायायानृचक्षसःपितरोगर्भमादधुः ॥ ११ ॥

[ 'उषसः' सम्बन्धी 'पृश्निः' आदित्यः(ठ) [ पृश्निरादित्यो भवति, प्राश्नुत एनं वर्ण इति नैरुक्ताः ]। 'अग्रियः' अग्रः मुख्यः सोमः 'अरूरुचत्' रोचयति। स 'उक्षा' जलस्य सेक्ता पर्जन्यः सन् 'मिमेति' भृशं शब्दायते। 'भुवनेषु' भूतजातेषु 'वाजयुः' तेषामन्नमिच्छन्; 'मायाविनः' माया प्रज्ञा तद्वन्तो देवाः 'अस्य' सोमस्य 'मायया' प्रज्ञया 'ममिरे' निर्मितवन्तः [ सोमस्य एकैकांश-पानवशात् अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्य 'अस्य' मायया 'नृचक्षसः' नृणां

---

(११) "मिमेसि भुवनेषु"—"बिभर्ति भुवनानि—"इति सामऋचः पाठभेदः

(ठ) 'बहुधादित्योऽपुष्पादित्य' इति च नैरुक्तम् २अ० ११पा० १० ख० ।

द्रष्टारः 'पितरः' पालकाः देवाः अङ्गिरसः पितरो वा 'गर्भम्' 'आदधुः' धारयन्ति ओषधीषु।

स चात्र सूर्य्यात्मा सोमः स्तूयते। सूर्य-रश्म्यनुगमाधीन-वर्द्धनाच्च चन्द्रस्य॥

यद्वा अयमुषसः शुश्रिः सविता अरुरुचत्-रोचयति रोचते वा। सर्वं शिष्टं समानम्। तत्सम्बन्धिनो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भमादधुरित्यर्थम्॥११॥

अथ तृतीया।

इत्योर्मधुच्छन्दो वैश्वामित्रो द्रष्टा गायत्रीच्छन्द इन्द्रो देवतेति।

२ ३ २ उ १ २ ३ १ २ १ १ २ १ २

इन्द्रइद्धर्य्योःसचासम्मिश्लआवचोयुजा।

१ २ ३ १ २ ३ १ २

इन्द्रोवज्रीहिरण्ययः॥ १२॥

'इन्द्रइत्' इन्द्र एव 'हर्य्योः' हरि-नामकयोरश्वयोः 'सचा' सह युगपत् 'आ सम्मिश्लः' सर्वतः सम्यङ्मिश्रयिता। कीदृशयोर्हर्य्योः? 'वचोयुजा' इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् 'इन्द्रः' 'वज्री' वज्र-युक्तः 'हिरण्ययः' हिरण्मयसर्वाभरणैरुपेत इत्यर्थः॥१२॥

अथ चतुर्थी।

मधुच्छन्दःविश्वामित्रऋषिः, गायत्रीच्छन्दः, इन्द्रो देवता।

१ १ २ ३ १ २

इन्द्रवाजेषुनोवसहस्रप्रधनेषुच।

२ ३ १ १ २ १ २

उग्रउग्राभिरूतिभिः॥ १३॥

हे इन्द्र! 'उग्रः' शत्रुभिरप्रधृष्यस्त्वम् 'उग्राभिः' अप्रधृ-

भाभि: ऊतिभि: अस्मदर्थे च-पर-पचामि: 'वाजेषु' युद्धेषु 'न:' अस्मान् 'अव' रक्ष। तथा 'मघवत्सु धनेषु' च प्रहस्त-सङ्ख्या-कगजाश्वादि लाभ-युक्तेषु महायुद्धेष्वपि रक्ष ॥ १२ ॥

अथ पञ्चमी।

प्रथ ऋषि, त्रिष्टुप्छन्दः, विश्वेदेवा देवता:।

१ ० २ १ २   २ १ ० ३ १   २र   २ १

प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हवि-

२ ३ २   २   १र   २ ० ३ १

षो हविर्यत्। धातुर्द्युतानात्सवितुश्च वि-

०   २ १ र   २ र २ १ ०

ष्णोरथन्तरमाजभारा वसिष्ठः ॥ १४ ॥

अपश्यत् प्रथ इत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवी भवेदेव छन्दोदैवत निर्णयः ॥ १ ॥

'यस्य' वसिष्ठस्य 'प्रथ नाम' पुत्र:, यस्य भरद्वाजस्य 'सप्रथ' नाम पुत्र:—तयोर्मध्ये 'वसिष्ठ.' मम पिता 'आनुष्टभस्य' अनुष्टुप्छन्दसा युक्तस्य 'हविष:' घर्माख्यस्य 'हवि.' हविष्टापादक 'रथन्तरं' नाम तद्रथन्तर 'धातु' धातृसंज्ञादेवात् (ड)। 'द्युतानात्' द्योतमानात् 'सवितुश्च' (ढ) 'विष्णोश्च' (ण) 'आ जभार' आजहार आहृतवान् (छान्दसोऽयं इति भत्वम्।) रथ-भष्दोपपदात्तरतेः सञ्ज्ञायां भृवृजीति खच्। अरुर्दिषद-जन्तस्येति मुमागम ॥ १४ ॥

---

(ड) 'धाता-विधाता' सर्वस्य इति नैरुक्तम् १का० ११ख० १०ख०।

(ढ) 'सविता सर्वस्य प्रसविता,—इति नैरुक्तम् १का० १०ख० ११ख०।

(ण) 'विष्णुर्विशतेर्वा व्यश्नोतेर्वा'-इत्यादि नैरुक्तम् १का० ११अ० १८ख०। एतच्च विष्णुशब्देन सर्वव्यापी सर्वान्तर्यामीति सिद्धान्त।

अथ षष्ठी॥

नियुत्वानिति गायत्री वायु गृत्समदोऽब्रवीत्।

१ । २ ३ ३ ३ २ ३ ३ ३ । २

नियुत्वान्वायवागह्ययꣳशुक्रोअयामि ते।

१ २ ३ २ ३ २

गन्तासि*सुन्वतो गृहम्॥ १५॥

हे 'वायो!' (त) 'नियुत्वान्' नियुतो वाहनानि वायो (नियुतो वायोरिति निघण्ट;) तैर्युक्तस्त्वं 'आगहि' आगच्छ। 'अयं' 'शुक्र' दीप्यमान सोम 'ते' तुभ्यम् 'अयामि' (याम कर्मणि लुङि रूपम्) नियतो गृहीत आसीत्। यत 'सुन्वत' सोमाभिषवं कुर्वती यजमानस्य 'गृह' 'गन्तासि' यातोऽसि॥ १५॥

अथ सप्तमी।

नृमेधपुरुमेधौ बाह्यपौ ऐन्द्रा अनुष्टुभ।

१२ २ ३ २ १२ ३ । २

यज्जायथाअपूर्व्यमघवन्वृत्रहत्याय।

१ २ २ ३ २ २ ३ २ ३ । २ ३ २

तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम्॥ १६॥

हे 'अपूर्व्य!' तस्मी व्यतिरिक्तेन पूर्वेण वर्जित। हे 'मघ

---

* "गतासि" इति ऋग्वेदपाठ।

(त) 'वायुवातेर्वेतेर्वा स्यात् गति कर्मण'-इत्यादि नैरुक्तम् १०॥० ११ १, २ ख॰।

वन् ।' महनीयतम । धनवन्निन्द्र । 'वृत्रहत्याय' (थ) वृत्रासुरहननाय 'यद्' यदा त्वं 'जायथा' उत्पन्न प्रादुर्भूतोऽसि 'तत्' तदानीमेव 'पृथिवीं' प्रथमानाम् 'अप्रथय' प्रसिद्धां दृढामकरो । 'उत' अपिच 'दिव' द्यां द्युलोकं अन्तरिक्षेण 'अस्तभ्ना' निरुद्धामकार्षीः (ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम्) ॥ १६ ॥

## इति द्वितीयः खण्डः ।

---

## अथ तृतीयखण्डे —

मैषा प्रथमा ।

वामदेवऋषि प्रोक्तो मयीत्यस्याः प्रजापतिः ।

देवतास्यास्तनच्छन्दोऽनुष्टुप् मध्य इतीरितम् ॥

२ ३ २ ३ २ १ १ र २र ३ ० २ १र १र
मयिवर्चोअथोयशोथोयज्ञस्ययत्पयः ।

२ २ ३ १ २ २ १र १ २र
परमेष्ठीप्रजापतिर्दिविद्यामिवदृꣳहतु ॥१७॥

'परमेष्ठी' परमे लोके तिष्ठतीति परमेष्ठी प्रजापति (द) 'दिवि' द्योतमाने स्वर्गे 'द्यामिव' द्योतमाना कान्तिमिव ।

---

(थ) 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्' इति नैरुक्तम् ७का० ७अ० १०ख० । 'इन्द्रकर्मो मेघवध'-इति तत्त्वभाष्यम् ।

(द) 'प्रजापति प्रजानां पाता पालयिता वा'-इत्यादि नैरुक्तम् १का० १० अ० ४१, ४२ ख० ।

'मयि' अस्मदीये शरीरे 'वर्चः' तेजः ब्रह्माख्यं 'दृंहतु' वर्द्धयतु। 'पयो' अपिच 'यशश्च' 'दृंहतु'। 'यशो' किञ्च। 'यज्ञस्य' यागस्य सम्बन्धि अतएव स उत्तमं 'पयः' हविर्लक्षणमन्नं च दृंहतु। १७॥

अथ द्वितीया।

त्रिष्टुभः पावमान्याः स्वार्दायर्गोतमनामकः।

२ १२ ३ १ २ २ २ ३ ३१२३१
सन्तेपयाꣳसिसमुयन्तुवाजाःसंदृष्ण्यान्यभि

३ १ २ ३ १ २ ३ १ २
मातिषाहः। आप्यायमानोअमृतायसोम

२ ३१२ ३१२ ३ १ २
दिविश्रवाꣳस्युत्तमानिधिष्व ॥ १८ ॥

हे 'सोम!' 'अभिमातिसाहः' अभिमातीनां शत्रूणां हन्तुः 'ते' तव एवंभूतं त्वां 'पयांसि' आपणार्थानि क्षीराणि 'संयन्तु' सङ्गच्छन्ताम्। तथा 'वाजाः' हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ता 'वृष्ण्यानि' वीर्याणि च सङ्गच्छन्ताम्। हे सोम! त्वं 'अमृताय' आत्मनः अमृतत्वाय अमरत्वाय 'आ' समन्तात् वर्द्धमानः सन् 'दिवि' नभसि स्वर्गे 'उत्तमानि' उद्गततमानि उत्कृष्टानि 'श्रवांसि' अन्नानि अस्माभिः भोक्तव्यानि हविर्लक्षणानि 'धिष्व' धारय (तेन क्रिया-ग्रहणं कर्त्तव्यमिति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ १८॥

अथ तृतीया।

(ऋष्यादिकम् पूर्ववत्)

३ १२३१२३ २ ३ २ ३ २३१ २
त्वमिमाओषधीःसोमविश्वास्त्वमपोअज-

१ २    १ २    १२ १ २२
नयस्त्वंगाः । त्वमातनो*रुर्वान्तरिचं

१२    २१ २ १२ २१
त्वंज्योतिषावितमोववर्थ ॥ १८ ॥

हे 'सोम'। 'त्वम्' 'इमा' भूम्या वर्त्तमाना 'विश्वा' सर्वा 'ओषधी' 'अजनयः' उत्पादितवानसि। तथा 'त्वम्' 'अप' तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनय। तथा 'त्व' 'गा' सर्वान् पशून् उदपादयः। 'उरु' विस्तीर्णम 'अन्तरिच' 'त्वम्' 'आतनोः' विस्तारितवानसि। तस्मिन्नन्तरिचे यत् 'तम' चक्षुर्दृष्टि निरोधकम् अन्धकारं तदपि 'त्व' 'ज्योतिषा' आत्मीयेन प्रकाशेन 'वि ववर्थ' विशिष्टं छन्न वानसि। (ववर्थ वृञ वरणे लिटस्थलि, "बभूथा ततथ जगृभ्म ववर्थेति" निपात्यते) ॥ १८ ॥

अथ चतुर्थी।

अग्निमीडे मधुच्छन्दा गायत्रेणाग्निसस्तुति।

१ २ १ २    २१ २    ११ २१२    २ २२
अग्निमीडे*पुरोहितंयज्ञस्यदेवमृत्विजम्।

१ २    २१    २
होतारं रत्नधातमम् ॥ २० ॥

'अग्नि' नामकं देवम्' 'ईडे' स्तौमि (ईडस्तुताविति धातु, मन्त्रस्यास्य होत्रा प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते) कीदृशम् अग्निम्? 'यज्ञस्य पुरोहित' यथा राज्ञ

* "आतनो" "आतन्य"—इति साम्न ऋच पाठौ।
* "मीळे" इति ऋग्वेदपाठ।

पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धि पूर्वभागे आह्वनीयरूपेणावस्थितम्। पुनः कीदृशम्? 'होतारमृत्विजम्' (देवानां यज्ञेषु होतृनामकमृत्विजमग्निरेव। तथाच श्रूयते—"अग्निर्वै देवानां होतेति")। पुनरपि कीदृशम्? 'रत्नधातमम्' यागफलानां रत्नानाम् अतिशयेन धारयितारं पोषयितारम्॥

अथाग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—"अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवति, अग्रं यज्ञेषु प्रणीयतेऽग्रं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरिताद्क्ताद्दग्धाद्वा नीतात् स खल्वेते रकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवति (७,४,१)" इति॥२०॥

अथ पञ्चमी।

त्रिष्टुभावामदेवोस्तौदग्निं तेमन्वतेति च।

१२ १२उ १ २ ३ २ ३ १
तेमन्वतप्रथमन्नामगोनांत्रिःसप्तप

२३१२ २ २ १ २ ३ २ क १२
रमन्नामजानन्। ताजानतीरभ्यनूप

३२ ३ १ २ ३ १२ ३२ ३ १ २
तश्चाआविर्भुवन्नरुणीर्यशसागावः* ॥२१॥

---

*"ताजानतीरभ्यनूपतश्चा आविर्भुवन्नरुणीर्यशसागावः"—इति छन्दोगाः। "ते मन्वत प्रथमं नाम गोनां त्रिःसप्त परमं

हे 'अग्ने !' 'ते' स्तोत्रं कुर्वाणा अङ्गिरस 'गोनां' गवां वाचां सम्बन्धि नाम स्तुति साधकं शब्द मात्रं 'प्रथमं' पूर्वम्, 'अमन्वत' अजानत। अथास्या वाच सम्बन्धीनि 'त्रि सप्त' एकविंशतिसंख्याकानि 'परम' परमाण्युत्कृष्टानि 'नाम' नामानि स्तुतिसाधकानि स्तोत्राणि (जातावेकवचनम्)। छन्दांसि वा, तानि च गायत्र्यादीनि जगत्यन्तानि सप्त, अति-जगत्यादीनि अतिधृत्यन्तानि सप्त, कृतिप्रभृतीन्युत्कृति पर्य्यन्तानि सप्त) 'जानन्' अजानन् अलभन्त (एवंविधच्छन्दो-युक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थः) 'ताः' वाच 'जानती' सर्वं जानत्य 'उषा' (क्षियन्ति गच्छन्त्यथः कार्य्य प्रापयन्ति ता) 'अभ्यनूषत' अस्तुवन्। तत सूर्य्यस्य 'यशसा' तेजसा सह 'अरुणी' अरुणवर्णा 'गाव' 'आविर्भुवन्' प्रादुरभुवन्। (यद्वा 'ते' अङ्गिरस 'प्रथम' पुरातन 'नाम' एहि सुरभि गुग्गुलु गन्धिनीति धेनु नामधेयम् 'अमन्वत' उच्चारयामासु। अथात् स्व भूतानि पणिभिरपहृतानि त्रि सप्त रत्नान्यविन्दन्। तत उच्चारित जानत्य 'गाव' अभ्यनूषत' हम्भारव लक्षण शब्दमकुर्वत। तदानीमुषा प्रादुरभूदिति ॥२१॥

अथ षष्ठी।

ऋषीय विदुषाग्नेयो दृष्टा गृत्समदेन सा ॥

३ १र २र ३ १ २ ३ २ ३ १

समन्यायन्त्युपयन्त्यन्याः समानमूर्व

---

नाम जानन्। ता जानतीरभ्यनूषत क्षा आविर्भुवन् धेनोरपि परमाणि विन्दन्। तज्जानतीरभ्यनूषत क्षा आविर्भुव दरुणी र्यशसा गोः"—इति म ६, ७।

३ २र ३ २ ३ २
नद्यस्तृणन्ति। तमूशुचिꣳशुचयोदीदि
१ ३ २ ३ १र २र ३ १ २ ३ १ २
दिवाꣳसमपान्नपातमुपयन्त्यापः* ॥ २२ ॥

'अन्याः' अपाम् 'आपः' 'संयन्ति' भूम्यां सङ्गच्छन्ते 'अन्याः' च 'पूर्वं' तत्रावस्थिताः 'उपयन्ति' उपगच्छन्ति। ता सर्वा आपः 'समानं' सह 'नद्यः' नदी भूत्वा 'ऊर्व' समुद्रमध्ये वर्त्तमान वडवानलं 'पृणन्ति' प्रीणयन्ति (पृण प्रीणने तौदादिकः) 'तमु' तमेव 'अपान्नपातम्' 'शुचिं' निर्मल 'दीदिवांसं' दीप्यमानं [दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः। वस्वेकाजाद्घसामिति नियमादिडभावः। छन्दसीवेति वक्तव्यमिति वचनाद्द्विवचनाभावः। एवंभूतं] 'शुचयः' शुद्धाः 'आपः' उपयन्ति' समीपे गच्छन्ति॥

एष हि वैद्युताग्निरूपेण मेघे वर्त्तमानोऽस्मान् अजीजनदिति बुद्धा वडवानलरूपेण वर्त्तमानं तं पर्य्युपासत इत्यर्थः। यद्वा अन्या एकवचनाख्या 'आपः संयन्ति। द्यावापृथिव्योर्मध्ये वसतीवरीभिः सङ्गच्छन्ते। अन्या वसतीवर्याख्या आपश्च उपयंति उपरि गच्छन्ति एकमत्यं प्राप्ता भवन्ति। एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा ऊर्वं पृणन्तीत्यादि समानम्। एवं हि आपो वा अस्यहस्य यद्यं पूर्वं यज्ञं अक्राम इत्यादिको बह्वृचब्राह्मणविनियोगाद्यानुसन्धेयं॥ २२।

* "अपान्नपातमुपयन्त्यापः"—"परिस्रुताप"-इति भाष्य-कृधः पाठ-भेदः॥

अथ सप्तमी।

अस्तौदनुष्टुभा रात्रिं वामदेव ऋचानया ॥

१२　२८२ १ २१ १२ २८२ १२　२८

आप्रागाद्भद्रायुवतिरह्नःकेतूंत्समीर्त्संति।

१२२ २ २ १२ ३ १ २ ३१२३१ २

अभूद्भद्रानिवेशनीविश्वस्यजगतोरात्री ॥२३॥

'भद्रा' सूर्य्यप्रकाशसन्ताप निवारयन्ती सुखकरी 'युवतिः' तमसो मिश्रयित्री 'रात्रिः' 'आप्रागाद्' आभिमुख्येन प्रगच्छति। 'अह्नः' चन्द्रमसः 'केतून्' रश्मीन् 'समीर्त्संति' सम्यग् वर्धयितुमिच्छति च। अतएव 'भद्रा'कल्याणी रात्री 'विश्वस्य' सर्वस्य 'जगतः' 'निवेशनी' निवेशकारिणी 'अभूत्' भवति। (अहनि स्वस्वव्यापारात् खिन्नान् सर्वप्राणिनः स्वाश्रयेषु स्थापयतीत्यर्थः॥ २३॥ - ·

अथ अष्टमी।

वैश्वानरं जगत्यास्तौद्भरद्वाजो बार्हस्पत्यः॥

३२३ १२　२ २३२४　३ २३ १२

प्रचक्षसष्टम्णोअरुपस्यनूमहः मनोवचो

२१२ ३ १२　　२　　१२ ३ १२

विदथाजातवेदसे। वैश्वानरायमतिर्न

१२३१ ३　१ २　　३१२३१२

व्यसेशुचिः सोमइवपवतेचारुरग्नये* ॥२४॥

---

* "प्रचक्ष"—"प्रचसा"-इति, "महः"-"सहः"-इति, "मनोवोच"-"म नु वोचम्"-इति,"जातवेदसे"-"जातवेदस"-इति, "व्यसे" "नव्यसि"-इति च साम्रकरच: पाठ-भेदः॥

'प्रवस्य' संहतस्य व्यासस्य (यद्वा दृष्टं द्रविणमनवद्यं तद्वतः) 'वृष्णः' सेक्तुः 'अरुषस्य' आरोचमानस्य 'वैश्वानराय'(ध) 'महः' पूजायुक्तं स्वं तेजो वा 'नु' क्षिप्रं स्तौमि। अतएव 'नः' अस्मदीयं 'वचः' वचनं 'विदथे' यागे 'प्रयच्छति' गच्छतीत्यर्थः। 'जातवेदसे' जातप्रज्ञाय जातधनाय वा तमुद्दिश्येत्यर्थः। (उक्तमेव प्रकारान्तरेणादरादाह) 'नव्यसे' नवतराय 'वैश्वानराय' अग्नये 'शुचिः' निर्मला स्तोतृणां शोधयित्री वा। 'चारुः' कल्याणी 'मतिः' मननीया स्तुतिश्च 'पवते' मत्सकाशात् प्रभवति स्वयमेव गच्छतीत्यर्थः। 'सोम इव' यथा सोमो-ऽभिषवात् स्रवति तद्वदित्यर्थः ॥२४॥

अथ नवमी।

एषा त्रिष्टुप् वैश्वदेवी भरद्वाजेन दृष्टा॥

१ २ ३ १र २र . २ ३ २ १र २र ३ १र

विश्वेदेवाममश्रृण्वन्तुयज्ञो॰मुभेरोदसीअपान्न

२र ३ १ २ ३ १ २ २ १ २

पाच्चमन्म। मावोवचाᳫंसिपरिचक्ष्याणि

२ ३ उ २ १ २

वोचᳫंसुम्नेष्विद्वोअन्तमामदेम ॥ २५ ॥

'विश्वे' सर्वे 'देवाः' 'मम' मदीयं 'मन्म' मननीयं 'यज्ञं' यजनीयं पूजां स्तौमि वा 'शृण्वन्तु' गृह्णन्त्वित्यर्थः। 'अपां नपात्' मध्यस्थानोऽग्निश्च 'उभे रोदसी' द्यावापृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु चित्ते अवधारयन्तु।

---

० "यज्ञं"—"यज्ञियाः"-इति पाठौ।

(ध) वैश्वानरः कस्माद् विश्वान् नरान् नयति इत्यादि नैरुक्तम् ७,२१।

अथ प्रत्यक्ष-कृताः।—हे देवाः। 'वः' युष्माकं 'परिवर्ज्याणि' परिवर्जनीयानि यानि 'वचांसि' स्तोत्राणि 'मा वोच' न ब्रवीमि। अपितु समीचीनानीति। अतः, वो युष्माकम् 'अन्तमाः' अन्तिकतमाः सन्तो वयं 'सुम्नेष्वित्' युष्माभिर्दत्तेषु सुखेष्वेव वर्त्तमानाः 'मदेम' मोदेम ॥ २५ ॥

अथ दशमी।

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवताः ॥

१ २ २ १ २ २ १२ ३२ ३ १
यशोमा द्यावापृथिवी यशोमेन्द्रबृहस्पती।
२ १ २ ३ १ २ ३ १ २
यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम्।
२ ३ २ ३ २ ३ १ २ ३ १ २
यशस्वा३ः स्याः संसदोऽहं प्रवदिता स्याम् ॥२६॥

'द्यावापृथिवी' द्यावापृथिव्योः 'यशः' 'मा' स्तोतारम् 'आविन्दतु' लभतां प्राप्नोत्वित्यर्थः। किञ्च, 'इन्द्रबृहस्पती' इन्द्राबृहस्पत्योः 'यशो' 'मा' मां विन्दतु। किञ्च, 'भगस्य' आदित्यस्य 'यशः' 'मा' मां विन्दतु। बहुलेन यशसा यशो मया 'मा प्रतिमुच्यतां' न प्रमुच्यताम्। 'यशस्व्याः' अस्याः मम 'संसदः' अमुष्य 'यशः' न प्रमुच्यताम्। 'अहं' प्रवदिता सर्वत्र वक्ता 'स्याम्' भूयासम् ॥ २६ ॥

अथ एकादशी ॥

दृष्टा हिरण्यस्तूपेन त्रिष्टुबैन्द्रदेवता ॥

१२ ३ १ ० ४ १२ ३ १ २ ३ १ २ ३ १ २
इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार

२१ २ २ १ १ । २ २ । २
प्रथमानिवज्री। अहन्नहिमन्वपस्त

२ १ २ १ २ २ । २
स्तदंप्रवक्षणाअभिनत्पर्वतानाम् ॥२७॥

'वज्री' वज्रयुक्त इन्द्रः 'प्रथमानि' पूर्वमिद्धानि मुख्यानि वा 'यानि' 'वीर्याणि' पराक्रमयुक्तानि 'कर्माणि' चकार। तस्य 'इन्द्रस्य' तानि वीर्याणि। 'नु' क्षिप्रं 'प्रवोचं' प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—'अहि' मेघम् 'अहन्' हतवान्। तदेतदेकं वीर्यम्। 'अनु' पश्चात् 'अपो' जलानि 'ततर्द' हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। 'पर्वतानां' सम्बन्धिनीः 'वक्षणाः' प्रवहणशीला नदीः 'प्राभिनत्' कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम्॥ २७॥

अथ द्वादशी।

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति द्वयोः।
उत्तरार्द्धेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः॥

१ १ २ १ १ १ १ १ १ २ २र २र
अग्निरस्मि जन्मनाजातवेदाघृतंमेचक्षु

१ । १ १ १ १ १ १ १ २र १ १
रमृतंमआसन्। विधातुरर्कोरजसो

१ २र २र १ १ १ १ १ २ १ २
विमानोजस्रं॰ज्योतिर्हविरस्मिसर्वं ॥२८॥

---

॰ "अजस्र"-"धर्मः"-इति साम्न ऋच, पाठ-भेदः।

माद्रात्कृत परतत्त्व स्वरूपोऽग्नि स्वात्मन सर्वात्मन सर्वात्मकत्वानुभवम् अस्यामृचि आविष्करोति—

हे कुशिका । भोक्तृ भोग्य भावेन द्विविधम् इद सर्वं जगत्। "एतावद्वा इदमन्न चैवान्नादश्च सोम एवान्नमग्नि रन्नाद," इति श्रुते । तत्र सकल भोक्तृ-वर्गं रूपेणान्नादोऽग्नि । स च अग्निवाय्वादित्य भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति। तदुक्त वाजसनेयके—"स त्रेधात्मान व्यकुरुतादित्य द्वितीय वायु तृतीयम्" इति।

तत्र सो 'ऽग्नि' अह 'जन्मना' एव 'जातवेदा' 'अस्मि' श्रवणमननादि साधन नैरपेक्ष्येण स्वभावतएव साक्षात्कृत पर तत्त्वस्वरूपोऽस्मि । 'घृत मे चक्षु' यदेतद्विश्वस्यावभासक मम स्वभावभूतप्रकाशात्मकं चक्षु तद् घृतन् इदानी मत्यन्त दीप्तम्। यदेतद् अमृत कर्मफल दिव्यादि विविध-विषयोपभोगात्मक तन्मे मम आसन्नास्ये वर्त्तते। सकल-भोक्तृ वर्गात्मना स्वयमेवावस्थानात्। (एव स्वात्मन पृथि व्यधिष्ठातृ रूपता मभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह) अर्को जगत. सदा प्राण । "सोर्चन्" चरत्तस्यार्चत आपो जायन्तार्चतेव प्रैकमभूदिति तदेवार्कस्यार्कत्वमिति श्रुते । स प्राण अह त्रिधातु त्रिधात्मान विभज्य तत्र वाय्वात्मना 'रजस.' ऽन्तरिक्षस्य 'विमान' विमाता अधिष्ठातास्मि। (तथा आदित्यरूपेण द्युलोकाधिष्ठातृतामाह—) 'अजस्र ज्योति' अनुपक्षीण नित्य तेज प्रकाशात्मा द्युलोकाधिष्ठाता आदि-त्योऽप्यह मस्मि। (एव भोक्तृ रूपता मात्मनोऽनुसन्धाय भो ग्य रूपता मप्यनुसन्धत्ते । यत् हविर्भोग्य प्रसिद्ध मस्ति तत्सर्वं मप्यह मवास्मि ॥

यद्वा। अह 'मग्नि र्वाक्ष देवाना हवि प्रापणात् अक्ष

नादिगुण-युक्तोऽस्मि। किञ्च, 'अमृतना' उत्पत्त्या 'जातवेदाः' जातप्रानोऽस्मि। उत्पत्ति-क्षण एव सर्वज्ञोऽहमस्मि। यद्वा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। तत् कथम्? इत्युच्यते—'घृतं' मे चक्षुः यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुः-स्थानीयम्, यथालोके चक्षुर्भासकम् एवं घृतमपि प्रचितं ज्वालामुत्पादयत मम भासकम्। 'अमृतं' प्रभारूपं। यदमृत मविनाशि ज्योतिः 'मे' मम 'आसन्' आस्ये वर्त्तते। 'त्रिधातुः' प्राणापानव्यानात्मकस्त्रिधा वर्त्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यह मेवास्मि। तथा 'रजसः' अन्तरिक्षस्य 'विमानः' विशेषेण माता परिच्छेत्ता वायुश्चाह मस्मि। किञ्च। 'अजस्रं ज्योतिः' नैरन्तर्य्येण तापकः सूर्य्यश्चाह मस्मि। किं बहुना। आज्य-पुरोडाशादि-रूपं यदेतद्धवि रस्ति तदुपलक्षित मतत्सर्वं मपदहमस्मि ('सर्वं खल्विदं ब्रह्मेति श्रुतेः') तमनेकधा मर्म्मः सर्वात्मकत्व-प्रतिपादनेन परब्रह्मत्व मुक्तं भवति। २८॥

अथ त्रयोदशी।

१ २ २ १ ।र २र २ ।र ।र २ ।र
पात्यग्निर्विपोअग्रं*पदंवे:पातियह्व

।र २ १ २ १ १ २ २ १ २
श्चरणंसूर्यस्य। पातिनाभासप्तशीर्षा-

१ ।र २र २ १ २ १ १ २ १ २
णमग्निःपातिदेवानामुपमादमृष्वः॥ २९॥

'अग्निः' 'वेः' गन्तुराः सर्वत्र व्याप्तायाः 'विपः' भूम्याः

---

* "पात्यग्निर्विपोअग्रम्"-"पाति प्रियं रिपोअग्रम्"-इति पाठौ।।७।७।

'अग्रं' मुख्य 'पदं' स्थानं 'पाति' रक्षति। 'यह्वः' महान् अग्निः 'सूर्यस्य' 'चरणं' चरत्यनेनेति चरणमन्तरिक्षं 'पाति'। 'नाभा' नाभौ अन्तरिक्षस्य मध्ये 'सप्तशीर्षाणं' सप्तगणं मरुद्गणं 'पाति'। 'ऋष्वः' दर्शनीयोऽयम् 'अग्निः' 'देवानाम्' 'उपमादम्' उपमादकं यज्ञं 'पाति' रक्षति ॥ २९ ॥

## इति तृतीयः खण्डः।

---

### अथ—चतुर्थखण्डे—

सैषा प्रथमा।

वामदेवऋषिः पंक्तिभ्राजंत्यग्न इति द्वयोः।
आग्नेयी प्रथमत्तंव्या द्वितीया दृश्यते तयोः॥

१ २                                        २ १ २ २
आजंत्यग्ने समिध्यानदीदिवोजिह्वाचरत्यं
२ ३ १ २      १२ २२      ३ १ २      ३ २ ३ १२
तरासनि। सत्वंनोअग्नेपयसावसुविद्रयिं
२२ ३ १ २
वर्चोदृशेदाः ॥ ३० ॥

'समिधान' ऋत्विग्भिः समिध्यमान। दीप्त! हे 'अग्ने'! 'भ्राजन्ती' प्रकाशमाना 'आसनि' आस्ये 'अन्तर्' मध्ये स्थिता त्वदीया 'जिह्वा' हवींषि 'चरति' भक्षयति। हे 'अग्ने'! 'वसुवित्'! धनलम्भक! त्वं 'नः' अस्मभ्यं 'पयसा' अन्नेन सह 'रयिं' रमणीयं धनं 'दृशे' दर्शनाय 'वर्चः' तेजश्च तेजस्वित्वं वा 'अदाः' देहि ॥ ३० ॥

1S/7/

अथ द्वितीया।

१ २र ३२ ३ २र ३२ १ २र ३२

वसंतइन्नुरंत्योग्रीष्मइन्नुरंत्यः। वर्षाण्यनु

१ २ ३ १ २र ३२ ३ १ २र ३२

शरदोहेमंतःशिशिरइन्नुरंत्यः ॥ ३१ ॥

'वसन्तः इत् नु' वसन्त एव चैत्र-वैशाखरूपवसन्त ऋतुरेव 'रन्त्यः' रमणीयः भवति। 'ग्रीष्म इत् नु' ज्येष्ठाषाढरूपो ग्रीष्म-ऋतुरेव 'रन्त्यः' रमणीयः। 'वर्षाणि' वर्षाः श्रावण भाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव 'रन्त्यः' रमणीयः। 'तथानु' 'शरदः' आश्विनकार्त्तिकरूपेणावयवीभूतऋतुः 'रन्त्यः' रमणीयः। 'हेमन्तः' मार्गशीर्ष-पौषरूप एव 'रन्त्यः' रमणीयः। 'शिशिर इत् नु' माघ-फाल्गुनरूप एव 'रन्त्यः' रमणीयः ॥१॥

अथ तृतीया।

१ २र ३ १२ ३ १ २र१

सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।

२र ३र १ २ ३ २ ३ २ ३

स भूमिꣳसर्वतो (१) वृत्वात्यतिष्ठद्दशांगुलम् ॥३२॥

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं 'सहस्रशीर्षाः' (सहस्र शब्दस्योपलक्षणत्वात्) अनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्व प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्र शीर्षत्वम्। एवं सहस्राक्षत्वं सहस्रपादत्वं च। स पुरुषः 'भूमिं' ब्रह्माण्ड-गोलक-रूपां सर्वतः 'वा' समन्तात् 'वृत्वा' परिवेष्ट्य दशाङ्गुल परिमितं देशम् 'अत्यतिष्ठत्' अतिक्रम्य व्यवस्थितः।

(१) "विश्वतो"-इति क॰।

(दशाङ्गुलमित्युपलक्षणम्) मह्माण्डाद्वहिरपि सर्वतो व्याप्याव-स्थित इत्यर्थः। ३२॥

अथ चतुर्थी।

२ २२३उ २ १२३ १ २ ३ १२३ १ २
त्रिपादूर्द्धं उदैत्पुरुषःपादोऽस्येहाभवत्पुनः।

३ १ क २र ३ २ ३ २
तथाविष्वङ्व्यक्रामदशनानशनेअभि(२) ॥३३॥

योऽय 'त्रिपात् पुरुष.' संसार स्पर्श-रहितः बहुल खरूप सोऽयम् 'ऊर्द्धं उदैत्' अस्मादज्ञान कार्य्यात्संसाराद्वहिर्भूत. सन् तत्रत्यैर्गुणदोषैरस्पृष्टः सत्कर्षेण स्थितवान्। 'अस्य' योऽय 'पादः' लेशः सोऽयमिह मायायां पुनरभवत्। सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति (अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति") तथा मायायामागत्यानन्तरं 'विष्वङ्' देव तिर्य्यगादि-रूपेण विविधः सन् 'व्यक्रामत्' व्याप्तवान्। किं कृत्वा ? 'अशनानशने' अभिलक्ष्य अशनं भोजनादि व्यवहारोपेतं चेतन प्राणि-जातम्, अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। तदुभयथा यथा स्यात्तथा अयमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥ ३३।

अथ पञ्चमी।

१ २ ३ २उ १ २ ३ १उ ३ १ १ २
पुरुष(३)एवेद्ंसर्वं यद्भूतंयच्चभाव्यम्(४)।

---

(२) "ततो विष्वङ् व्यक्रामत् साशनानशने अभि" ऋ०

(३) "पुरुषवेद"—(४) "यच्च भव्यम्"—

१ २ ३ १ २ ३ १ १ २ १ २ ३ १ २ ३ १
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि(५) ॥३४॥

यत् 'इदं' वर्त्तमानं जगत् तत् 'सर्वं' 'पुरुष एव'। 'यद्भूतम्' उत्पन्नं जगत् 'यच्च भाव्यं' भविष्यज्जगत् तदपि पुरुष एव। यस्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुषस्यावयवा तथैव गतागामिनोऽपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—'अस्य' पुरुषस्य 'सर्वाणि भूतानि' कालत्रयवर्त्तीनि प्राणि-जातानि 'पाद' चतुर्थोऽंशः। 'अस्य' पुरुषस्यावशिष्टं 'त्रिपात्' स्वरूपम् 'अमृतं' 'विनाश रहितं' सत् 'दिवि' द्योतनात्मके स्व प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः। (यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनन्तस्य परब्रह्मणो ह्येयदत्ताभावात् पादचतुष्टयं निरूपयितुमशक्यं, तथापि जगदिदं ब्रह्म-स्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वोपचारः ॥ ३४ ॥

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ १ २
तावानस्य(६)महिमाततो(७)ज्यायाꣳश्चपूरुषः(८)
३१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥३५॥

अतीतानागतवर्त्तमान रूप जगदाद्याधारो योऽस्ति 'तावान्' सर्वोऽपि 'अस्य' पुरुषस्य 'महिमा' स्वकीय-सामर्थ्य-

(५) "उतामृतत्वेत्यादि" ऋ०।
(६) "एतावानस्य"—(७) "अतोज्यायांश्च"—
(८) "पादोऽस्येत्यादि" ऋ०

विशेष । न तु तस्य वास्तव स्वरूपम् । वास्तवस्तु 'पुरुष' 'ततो' महिम्नोऽपि 'ज्यायान्' अतिशयेनाधिक इत्यर्थ । 'उत' अपिच 'अमृतत्वस्य' देवत्वस्य 'अयम् ईशान' स्वमायया 'यत्' यस्मात् कारणात् '‘अन्नेन' प्राणिना भोग्येन अन्नेन निमित्त भूतेन 'अतिरोहति' स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमान जगदवस्था प्राप्नोति । तस्मात् प्राणिना कर्म फल भोगाय जगदवस्था स्वीकारात् नेद तस्य वस्तु तत्त्वमित्यर्थ ॥ ३५ ॥

अथ सप्तमी ।

१२    ३ १ २     ३ १ २ २ २ १ २

ततो(८)विराडजायतविराजोअधिपूरुषः ।

२ १र   २र    २ ३उ   ३ १ २२२

सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः ॥३६॥

"विष्वङ् व्यक्रामत्" इति यदुक्त तदेवात्र प्रपञ्च्यते-'तत' तस्मादादि पुरुषात् 'विराट्' ब्रह्माण्ड देह 'अजायत' उत्पन्न. । (विविधानि राजन्ते वस्तून्यत्रेति विराट्) 'विराजो अधि' विराड् देहस्योपरि तमेव देहमधिकरणं कृत्वा 'पूरुष' तद्देहाभि मानो कश्चित्पुमानजायत । योऽयं सर्व वेदान्त वेद्यः परमात्मा सण्व स्वकीयया मायया विराड् देह ब्रह्माण्ड-रूप सृष्टा तत्र जीव रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् (एतच्चाथर्वणिक उत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराज देवता कोशांश्च सृष्टा प्रविश्य मूढो मूढ इव व्यवहरन्नास्ते माययैवेति") 'स जात.' विराट पुरुष 'अत्यरिच्यत' अतिरिक्तोऽभूत् । विराड व्यतिरिक्तो देवतिर्य्यङ्मनुष्यादिरूपोऽभवत् । पश्चाद्देवादि जीव

---

(८) "तस्माद्" ऋ० ।

भावादूर्ध्वं भूमिं ससर्जेति शेषः। 'अथो' भूमि-सृष्टेरनन्तरं तेषां लोकानां 'पुरः' ससर्ज [पूर्य्यन्ते सप्तभिर्धातुभिरिति पुरः] शरीराणि ॥ २६ ॥

मन्ये वामिति पञ्चर्चो वामदेवेन वीक्षिताः ।
अवाय्येकाग्निमि च द्वे त्रिष्टुभस्तासु चादिमा ॥
उपरिष्टाज्ज्योतिरिति वक्ष्यु चैव विधीयते ।
अन्ये अनुष्टुभौ द्यावापृथिव्योः प्रथमा तथा ॥
द्वितीयैन्द्री चतुर्थी च तृतीयाग्नेर्निजात्मनः ।
स्तुतिर्गवामन्तिमेति छन्दोदैवत निर्णयः ॥

अथ अष्टमी ।

वामदेवऋषिः । त्रिष्टुप्छन्दः । द्यावापृथिवी देवते ।

१ २ २ १ २ ३ १र ३र ३ १

मन्येवांद्यावापृथिवीसुभोजसौयेअप्रथेथाम

२ ३ १र ३र १ २ ३ १ २

मितमभियोजनम् । द्यावापृथिवीभवतम्

२ १र २र ३ १ २

स्योनेतेनोमुञ्चतमꣳहसः ॥३७॥

हे 'द्यावापृथिवी' द्यावापृथिव्यौ । 'वां' युवां 'सुभोजसौ' शोभनपालयितारावितिं 'मन्ये' अहं जानामि ये द्यावापृथिव्यौ 'अमितम्' अपरिमितं 'योजनं' [युज्यते पुरुषोऽनेनेति योजनं] धनादि तत् 'अभ्यप्रथेयाम्' अभिविस्तारयतम् हे 'द्यावापृथिवी' द्यावापृथिव्यौ । युवां अस्माकं 'स्योने' सुरूपे स्वसुखकार्य्ये 'भवतम्' 'ते' द्यावापृथिव्यौ 'नः' अस्मान् 'अंहसः' पापात् 'मुञ्चतं' मोचयतम् । ३७ ॥

अथ नवमी।

अनुष्टुप्छन्दः। इन्द्रो देवता। वामदेव ऋषिः।

१ २ २ १ २ २ १ २ २ २ २ १ २
इरीतइन्द्रश्मश्रूण्युतोतेहरितौहरी।

१ २ २ १ २ २ १ २ २ १ २
तंत्वास्तुवन्तिकवयःपुरुषासोवनर्गवः॥३८॥

हे 'इन्द्र'। 'ते' तव 'श्मश्रूणि' 'हरी' सोम पानेन हरित वर्णानि [तथाच श्रूयते—'इन्द्र श्मश्रूणि हरितानि प्रधुत' इति। "मेण्छन्दसि बहुलम्" इति हरि शब्दात्परस्य शेर्लुक्] 'उतो' अपिच। 'ते' 'हरी' अश्वौ 'हरितौ' हरिद्वर्णौ। 'कवय' मेधाविन 'पुरुषास' पुरुषा 'वनर्गव' वनगोया मधजनीया सेवनीया गावो येषां ते वनर्गव [मध्यरेफश्छान्दसः। गोस्त्रियोरिति ह्रस्वत्वं] तादृश कवय 'तं' 'त्वा' त्वा स्तुवन्ति॥३८॥

अथ दशमी।

वामदेव ऋषिः। अनुष्टुपछन्दः। आशासने विनियोज्या।

२उ ३ १ २ २ १ २ २ २ १ २ २ २ २ २
यद्वर्चोहिरण्यस्ययद्वावर्चोगवामुत। सत्यस्य

१ २ २ २ २ १ २ २ १ २
ब्रह्मणोवर्चस्तेनमासꣳसृजामसि॥३९॥

'हिरण्यस्य' हित रमणीयस्य एतन्नामकस्य 'यद्वर्चं' तेजो ऽस्ति। 'यद्वा' अपिच। 'गवाम्' एतन्नामकानां 'यद्वर्चं' तेजोऽस्ति। 'उत' अपिच। 'सत्यस्य' सर्वे, सम्मतस्य 'ब्रह्मण' यद्वर्चोऽस्ति तेन तै 'मा' 'सꣳसृजामसि' सम्पादयाम'। अन वन्त परमन्त योविया भवेमेति तात्पर्य्यार्थं॥३९॥

अथ एकादशी।

२ १ १ ३ २ ३ १२क ३२ १ २
सहस्तन्नइन्द्रदध्योजईशेह्यस्यमहतोविरप्-

३ २ ३ ११ ३२ ३ १२ ३२३ १
शिन्। क्रतुन्ननृम्णंस्थविरंचवाजंवृत्रेषुश

२ ३१२
त्रूनसुहनाकृधि नः ॥४०॥

हे 'विरप्शिन्'। विशेषेण रपणं महत् वचनं तदस्यास्तीति विरप्शी, तस्य सम्बोधनं हे विरप्शिन्। विशेषेण स्तोत्रविषये महत्वाक्य। 'इन्द्र'! 'तं' तव 'महः' शत्रूणामभिभवनरूपम् 'ओज' बलं 'नः' अस्मभ्यं 'दधि' (ददातेश्छान्दसं रूपं लोडि हेर्धिभावादिना) यस्मात् त्वं तस्य 'अस्य' 'महतः' बलस्य 'ईशे' ईश्वरो भवसि। अतो हे इन्द्र। 'नः' अस्माकं 'क्रतुं न' यज्ञमिव 'नृम्णं' धनं 'स्थविरम्' अतिशयेन प्रवृद्धं "वाजं" बलं च 'कृधि' कुरु। किञ्च नोऽस्माकं 'शत्रून्' 'वृत्रेषु' आवरकेषु उपायेषु 'कृधि' कुरु॥ ४०॥

अथ द्वादशी।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
सहर्षभाः सहवत्साउदेतविश्वारूपाणिबिभ्र

३ २ ३ २ ३ १ २ ३ २ ३ १२
तीर्द्व्यूध्नीः। उरुःपृथुरयंवोअस्तुलोकइमा

२२ ३ २ ३ १ २
आपः सुप्रपाणाइहस्त ॥४१॥

हे 'सहर्षभाः'! वृषभैः सहिता। 'सहवत्साः'! वत्सै.

सहिता' । गाव: । ''दूघ्नी.' सायं प्रात' काले द्विविधान्यू-धासि यासा ता दूध्नी दूघ्ना । 'विश्वा' सर्वाणि नाना-रूपाणि बिभ्रती.' बिभ्रत्य, यूयम् 'उदेत' उद्गच्छत समृद्धा. सत्य. आगच्छत । किञ्च । 'उरु' बहु 'पृथु' विस्तीर्ण (उरु पृथुरिति शब्दाभ्याम् आयाम-विस्तारौ उच्येते । 'अय लोक' 'व' युष्माकम् 'अस्तु' भवतु । 'इमा आप.' 'इह' लोके भूतले अस्मिन् स्थाने 'सुप्रपाणा.' सुखेन प्रकर्षेण पातु योग्या' सन्तु तस्मादिह बद्धीभूता. 'स्त' भवत उपविशतेति पूर्वेण सम्बन्ध ॥ ४१ ॥

## इति चतुर्थः खण्डः ।

---

## अथ पञ्चमे खण्डे—

अथ प्रथमा ।

चतुर्दशाग्न आयू पीत्याद्यास्तत्र जगत्यमौ ।
विश्वाद्त्रिष्टुप्चित्रमिति गायत्र्यो द्वादशेतरा ।
आद्याग्ने पवमानस्य स्तुति' सौर्यस्तयोदश ।
ऋषीणा विप्रकीर्णत्वात्तत्र तत्राभिदध्महे ।
शते वैखानसा एव दृष्टवन्तो महर्षय: ।

१ ३ १ २ ३ २ ३ ९ १ २
अग्नआयूंषिपवसआसुवोर्जमिषंचन: ।
३ १ २ ३ १ २
आरेबाधस्वदुच्छुनाम् ॥४२॥

हे 'अग्ने' । पवमान रूप । अस्माकमायूंषि प्रशस्तान्यन्नानि सा 'पवसे' क्षरसि 'न:' अस्माकम् 'ऊर्जम्' बलकरम्

'इषम्' अन्नं च 'आसुव' आभिमुख्येन प्रेरय। किञ्च। 'दुच्छुनां' (रक्षोनामैतत्) रक्षांसि 'आरे' अस्मत्तो दूर एव 'बाधस्व' सम्पीड़य॥ ४२॥

अथ द्वितीया।

विभ्राण्नामक एता तु सूर्य्यपुत्रो ऽदर्श सः।

१२ २ १ २ १ २उ २ । २ २ । २२

विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता

१ २ १ २ ३ १ । २ २ ३ २ २ १ २ १

वविह्रुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः

२ २ । ३ २उ

पिपर्त्ति बहुधा विराजति ॥४३॥

'विभ्राट्' विभ्राजमानः विशेषेण दीप्यमानः सूर्य्य 'बृहत्' परिवृढ़ं 'सोम्य' सोममय 'मधु' पिबतु। किं कुर्वन्? 'यज्ञपतौ' यजमाने 'अविह्रुतम्' अकुटिलम् अकपटकम् आयुर्दधत् अन्नं वा कुर्वन्। 'यः' सूर्य्यः 'वातजूतः' वातेन वायुना प्रेर्य्यमाणः सन् 'त्मना' आत्मना स्वयमेव अभिरक्षति सर्वं जगदभिव्याप्य पालयति (राशि चक्रस्य वायुप्रेर्य्यत्वात् सूर्य्यस्यापि तत्प्रेर्य्यत्वम्) स सूर्य्य 'प्रजाः' पिपर्त्ति' (१०) हव्यादि प्रदानेन पूरयति पालयति वा 'बहुधा' 'विराजति' विशेषेण दीप्यते च॥ ४३॥

अथ तृतीया।

कुत्सः।

१ २ ३ १ २ १२ ३ १ ० १ २ २ ३ २ ३ १ २

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुण-

(१०) 'पिपर्त्ति"-"पुपोष"-इति, "बहुधा" "पुरुधा" इति च पाठौ॥

२ २ २ १ २ २ २ १ २ २ १
स्याग्नेः। आप्राद्यावापृथिवीअन्तरिक्षꣳसू-
२ २ १र २र २ १ २
र्यआत्माजगतस्तस्थुषश्च ॥४४॥

'देवानां' दीव्यतीति देवा रश्मयः, तेषां देवानामेव वा प्रसिद्धानाम् 'अनीकं' तेजःसमूह रूपं 'चित्रम्' आश्चर्य्य-कर सूर्य्यमण्डलम् 'उदगात्' 'उदयाचलं प्रयासीत्। कीदृशं? 'मित्रस्य वरुणस्याग्नेश्च' (चक्षुरुपलक्षणमेतत्) एतदुपलक्षितानां जगतां 'चक्षु.' प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदय प्राप्यैव 'द्यावापृथिवी' दिवं च पृथिवीं च अन्तरिक्षं च 'आप्राः' स्वकीयेन तेजसा 'आ' समन्तात् अपूरयत्। ईदृशभूत मण्डलान्तरवर्त्ती सूर्य्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा 'जगतः' जङ्गमस्य 'तस्थुषश्च' स्थावरस्य च 'आत्मा' स्वरूप-भूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य्य-वर्गस्य (कारणाच्च कार्य्यं नातिरिच्यते। तथाच पारमर्षसूत्रं—"तदनन्यत्वमारम्भण शब्दादिभ्यः"-इति। यद्वा। स्थावर-जङ्गमात्मकस्य सर्व-प्राणि जातस्य जीवात्मा। उदिते हि सूर्य्ये मृतप्रायं सर्वं जगत् पुनश्चेतन-युक्तं सत् उपलभ्यते। तथाच श्रूयते—"योऽसौ तमो हृदेति सर्वेषां भूतानाम्। प्राणानादायोदेतीति ॥ ४४ ॥

अथ चतुर्थी।

आयङ्गौः पृश्निरित्यस्य सार्पराज्ञी समैक्षत।
ऋचस्तिस्रो भवेदासां विकल्पेनार्कदेवता ॥

१र २र २ १ १ २ १ २
आयंगौःपृश्निरक्रमीदसदन्मातरं

१२ १-१२ ३१ २
पुरः । पितरंचप्रयन्त्स्वः ॥४५॥

। 'गौ' गमनशील 'पृश्नि' प्राष्टवर्ण व्याप्ततेजा 'अयं सूर्य्य 'आक्रमीत्' आक्रान्तवान् उदयाचल प्राप्तवानित्यर्थः । आक्रम्य च 'पुर' पुरस्तात् पूर्व्वस्या दिशि 'मातरं' सर्व्वस्य भूतजातस्य निर्मात्रीं 'भूमिम्' 'असदत्' आसीदति प्राप्नोति ( सदेश्छान्दसो लेट् । लृदित्वात् च्लेरङादेशः ) तत 'पितरं' पालक द्युलोक, 'च' शब्दादन्तरिक्षं 'प्रयन्' प्रकर्षेण शीघ्र गच्छन् 'स्व' सु अरण शोभन गमनो भवति । यद्वा । पितरं स्वर्लोक प्रयन्ते ॥ ४५ ॥

अथ पञ्चमी ।

३ १ २ ३उ ३ १ २ ३ २
अन्तश्चरतिरोचनास्यप्राणादपानती ।

३उ ३ १र १र
व्यख्यन्महिषोदिवम् ॥४६॥

'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिरन्त शरीर मध्ये मुख्य प्राणात्मना 'चरति' वर्त्तते । किं कुर्व्वती ? 'प्राणाद पानती' ( मुख्य प्राणस्य प्राणाद्या पञ्च वृत्तय । तत्र प्राणन नाडीभिरूर्ध्व वायोर्निर्गमन ) तथाविधात्प्राणात् प्राणनाद-नन्तरम् अपानती ( अपाननं नाडीभिरवाङमुख वायो र्नयन) तत् कुर्व्वती ( अपपूर्व्वादनितर्भट शप', पदादित्वा च्छपो लुक् । उगितश्चेति ङीप् । शतुरनुम इति नद्या उदात्त त्वम्) ।

यद्वा । 'अन्त.' द्यावापृथिव्योर्मध्ये "अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्ति "चरति" गच्छति ( रुच दीप्तौ ।

अनुदात्तेतश्च हलादेरिति युच्) किं कुर्वती ? "प्राणात्" प्राणनादुदयादनन्तरम् 'अपानती' सायाह्नसमये अस्तङ्गच्छन्ती। (ईदृश्या दीप्त्या युक्त) अतएव 'महिष' महान् सूर्य्यं 'दिवम्' अन्तरिक्ष उदयास्तमययोर्मध्ये 'व्यख्यत्' विशिष्टे प्रकाशयति (महेरुच् महेष्टिषचिति औणादिकष्टिषच्प्रत्यय)। अचिड ख्याञ् शब्दने लुङि अस्यतिवक्तिख्यातीत्यादिना च्लेरङादेश ॥४६॥

अथ षष्ठी।

३ २उ ३ १२ ३ १ २ ३१ २

त्रिंशद्धामविराजतिवाक्पतंगायधी

२ ३ २ ३ १ १ २

यते। प्रतिवस्तोरहद्युभिः ॥४७॥

'त्रिंशद्धाम' धामानि स्थानानि (वचनव्यत्यय) 'वस्तो' वासरस्य अहोरात्रस्यावयवभूतानि। 'अह' शब्दोऽवधारणे। 'द्युभि' सूर्य्यस्य दीप्तिभिरेव विराजति विराजते विशेषेण दीप्यते (व्यत्ययेनैकवचनम्। मुहूर्त्तान्येव धामान्युच्यन्ते। पञ्चदशरात्रे पञ्चदशाह्न) 'पतङ्गाय' पतति गच्छतीति पतङ्ग सूर्य्यं तस्मै सूर्य्याय स्तुति रूपा 'वाक्' 'प्रतिधीयत' प्रतिमुख स्तोतृभिर्विधीयते क्रियते [यद्वा वस्तो' अह 'त्रिंशत् 'धाम' धामानि (घटिकाभिप्रायमेतत्) त्रिंशद्घटिका (अत्यन्तसंयोगे द्वितीया) एतावत्काल 'द्युभि' दीप्तिभिरसौ सूर्य्यं 'विराजति विशेषेण दीप्यते। तस्मिंश्च समये 'वाक्' त्रयीरूपा तस्मै 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुख धार्य्यते स पूर्व सेवत इत्यर्थ । [श्रूयते हि "ऋग्भि पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्न। सामवेदे नास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य्य" इति। यद्वा त्रिंश मुक

सोऽपरिहार्या सोमस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ।४७।

अथ सप्तमी।

२ ३ १ २ ३   ३ १ २   ३ १ २

अपत्येतायवोयथानक्षत्रायन्त्यक्तुभिः।

१२   ३१२

सूरायविश्वचक्षसे॥४८॥

'त्ये' 'तायवः' 'यथा' प्रसिद्धास्तस्करा इव 'नक्षत्राणि' देवगृहरूपाणि ("देवगृहा वै नक्षत्राणि" इति श्रुत्यन्तरात्) यद्वा, इह लोके मानुषा ये स्वर्गमाप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच—श्रूयते—'यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्' इति। यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इत्याम्नायात्। यास्कश्चाह—'नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणम्' इति) तथा विधानि नक्षत्राणि 'अक्तुभिः' रात्रिभिः सह 'अपयन्ति' अपगच्छन्ति। 'विश्वचक्षसे' विश्वस्य सर्वस्य प्रकाशकस्य 'सूराय' सूर्यस्य आगमनं दृष्ट्वेति शेषः (तस्करा नक्षत्राणि च रात्रिभिः सह सूर्यं आगामिनं दृष्ट्वा पलायन्त इत्यर्थः)। तायुरिति स्तेननाम। तायुस्तस्कर इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम। शर्वरी अक्तुरिति तन्नामसु पाठात्॥४८।

अथाष्टमी

३ १   ३ २ ३   ३ २ ३ २ ३ २

अदृश्रन्(१)अस्य केतवोविरश्मयोजनाँ

(१)"अदृश्रन्"—"अदृश्रम्" इति पाठौ॥

१ २ ३ १ २ ३ २

अनु। भ्राजन्तोअग्नयोयथा ॥४९॥

'अस्य' सूर्यस्य 'केतवः' प्रज्ञापका 'रश्मयः' दीप्तयः, 'जनान् अनुव्यदृश्रन्' जनान् सर्वान् अनुक्रमेण प्रैक्षन्त। सर्वं जगत् प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—'भ्राजन्तः' दीप्यमाना 'अग्नय इव'॥ ४९॥

अथ नवमी।

२ ३ १ २ ३ १ २ ३ १ २

तरणिर्विश्वदर्शतोज्योतिष्कृदसि

२ ३ १ २ ३ २

सूर्य्य। विश्वमाभासिरोचनम् ॥५०॥

हे 'सूर्य!' त्वं 'तरणिः' प्रगन्ता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि (तथाच स्मर्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाणं नमोऽस्तु ते॥" इति। यद्वा, उपासकानां रोगात्तारयितासि। "आरोग्यं भास्करादिच्छेत्" इति स्मरणात्) तथा 'विश्वदर्शतः' विश्वैः सर्वैः प्राणिभिर्दर्शनीयः (आदित्य-दर्शनस्य चण्डालादि-दर्शन जनित-पाप-निवर्हण-हेतुत्वात्। तथाचापस्तम्बः—'दर्शने ज्योतिषां दर्शनम्' इति। यद्वा, 'विश्वं' सर्वं भूतजातं 'दर्शतं' द्रष्टव्यं प्रकाश्यं येन स तथोक्तः) तथा 'ज्योतिष्कृत्' ज्योतिषः प्रकाशस्य कर्त्ता। सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः (यद्वा, चन्द्रादीनाम्। रात्रौ हि अम्मये चन्द्रादिषु सूर्य-किरणाः प्रतिफलिता अतोऽन्धकारं निवारयन्ति। यथा द्वारस्थ दर्पणे प्रतिनिपतिताः सूर्यरश्मयो गृहान्तर्वर्त्ति तमो निवारयन्ति तद्वदित्यर्थः) यस्मादेव तस्मात् 'विश्वं' सर्वं 'रोचनं' रोचमानम् 'आ' समन्तात् 'भासि' प्रकाशयसि॥

यद्वा, हे "सूर्य!" अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्। "तरणि" संसाराब्धेस्तारकोऽसि। यस्मात् त्वं 'विश्वदर्शतः' विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः [अधिष्ठानसाक्षात्कारे हि आरोपितं निवर्तते] ज्योतिषः सूर्यादेः कर्त्ता [तथाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत" इति] इहशस्त्वं चिद्रूपतया 'विश्वं' सर्वं दृश्यजातं 'रोचनं' दीप्यमानं यथा भवति तथा 'आभासि' प्रकाशयसि [मैव व्यक्तरूपेण हि सर्वं जगत् दृश्यते। तथाचाम्नायते—"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति ॥ ५० ॥

अथ दशमी।

१ २  २ ३ २  १ २  ३ १ ३  ३ २ ३ १
प्रत्यङ्देवानांविशः प्रत्यङ्ङुदेषिमा
२  १  २  ३ १२ ३ २
नुषान्। प्रत्यङ्विश्वंस्वर्दृशे ॥५१॥

हे सूर्य! त्वं 'देवानां' 'विशः' मरुन्नामकान् देवान् ["मरुतो वै देवानां विशः" इति श्रुत्यन्तरात्]। तान्मरुत्प्रकारान् देवान् 'प्रत्यङ् उदेषि' प्रतिगच्छन् उदयं प्राप्नोषि। तेषामभिमुखं यथा भवति तथेत्यर्थः। तथा 'मानुषान्' मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथा त्वदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा। 'विश्वं' सर्वं 'स्वः' द्युलोकं 'दृशे' द्रष्टुं 'प्रत्यङ् उदेषि'। यथा स्वर्लोकवासिनो जनाः स्वस्वाभिमुखेन पश्यन्ति तथा उदेषीत्यर्थः [एतदुक्तं भवति—ये लोकाः पश्यन्ति ते जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति। तथाचाम्नायते—'तस्मात् सर्व एव मन्यन्ते मां प्रत्युदगात्' इति ॥५१॥

अथ एकादशी।

१ २ ३ २ १ २ ३ २ ३ २ ३ १ २

येनापावकचक्षसाभुरण्यन्तंजनाꣳ

१ ३ १ २ ३ १ २

अनु। त्वंवरुणपश्यसि॥५२॥

हे 'पावक!' सर्वस्य शोधक! 'वरुण!' अनिष्ट वारक सूर्य्य! त्वं 'जनान्' प्राणिनः 'भुरण्यन्तं' धारयन्तं पोषयन्तं वा इमं लोकं येन 'चक्षसा' प्रकाशेन अनुपश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः। [यद्वा। उत्तरस्यामृचि अस्यान्वयः, तेन चक्षसा उदेषीति। तथा च यास्केनोक्तम्—'तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्याख्यास्यामीति'] ॥ ५२ ॥

अथ द्वादशी।

१२ ३१२ ३ १ २ ३ १ २ ३ १ २ ३ २

उद्या(२)मेषिरजः पृथ्वहामिमानोअ

१ २ ३ २ १ २

क्तुभिः। पश्यंजन्मानिसूर्य्य ॥५३॥

हे 'सूर्य्य!' त्वं 'पृथु' सुविस्तीर्णं 'रजः' लोकं [लोका रजांस्युच्यन्ते" इति यास्कवचनात्] द्युलोकं 'द्याम्' अन्तरिक्षलोकम् 'उदेषि' उद्गच्छसि। किं कुर्वन्? 'अहानि' 'अक्तुभिः' रात्रिभिः सह 'मिमानः' कुर्वाणः [आदित्यगत्यधीनत्वादहोरात्रविभागस्य] तथा 'जन्मानि' जननवन्ति भूतजातानि 'पश्यन्' प्रकाशयन्। ५३ ॥

---

(२) "उद्याम्"—"विद्याम्" इति पाठौ।

अथ त्रयोदशी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३र २र
अयुक्तसप्तशुन्ध्युवः सूरोरथस्यनप्त्यः
१ २ ३ १ २
ताभिर्यातिस्वयुक्तिभिः ॥५४॥

'सूरः' सर्वस्य प्रेरकः सूर्य्यः, 'शुन्ध्युवः' शोधिकाः स्त्रियः। तादृशीः सप्त सप्त संख्याकाः 'अयुक्त' स्व रथे योजितवान्। कीदृशीः? 'रथस्य' 'नप्त्यः' न पातयित्र्यः। रथो याति न पतति ईदृशीरित्यर्थः। 'ताभिः स्वयुक्तिभिः' स्वकीय-योजनेन रथे युक्ताभिः यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्यमिति शेषः ॥ ५४ ॥

अथ चतुर्दशी।

३ १ २ ३ १ २ ३ २ ३ १ २
सप्तत्वाहरितोरथेवहंतिदेवसूर्य।
२ ३ १ २
शोचिष्केशंविचक्षण ॥५५॥

हे 'सूर्य्य!' 'देव!' द्योतमान! 'विचक्षण'! सर्वस्य प्रकाशयितः! 'सप्त' सप्त-संख्याकाः 'हरितः' अश्वाः रस-हरणशीला रश्मयो वा 'त्वा' त्वां 'वहन्ति' प्राप्नुवन्ति। कीदृशम्? 'रथे' अवस्थितमिति शेषः। तथा 'शोचिष्केशं' शोचींषि दीप्तय एव यस्मिन् केशा इव दृश्यन्ते स तथोक्तस्तमिति ॥ ५५॥

इति श्रीमद्भगवत्कुथुमर्षिप्रादुष्कृता
सायणाचार्य्यकृतभाष्यसहिता सामवेदीया
आरण्यसंहिता समाप्ता॥

---

